मिलित्वा देवतारूपा अक्षरावयवाः। तत्सङ्घातरूपेयं बृहती देवताऽऽदित्यमण्डलस्याधारभूता तया धारितमादित्यमण्डलं अधो न पततीति स्तोत्रगानकाले भावनार्थमिदं देवतारूपं निरूप्यते ॥

अथ देवतारूपाणां छन्दसां सम्वादमुखेन सर्व्वेषां प्रशस्तं बृहतीरूपत्वं सम्पादयति। "यानि च छन्दाꣳस्यत्यरिच्यन्त। यानि च नोदभवन्। तानि निर्वीर्य्याणि हीनान्यमन्यन्त। साब्रवीद् बृहती। मामेव भूत्वा। मामुपसꣳश्रयतेति। चतुर्भिरक्षरैरनुष्टुब्बृहतीं नोदभवत्। चतुर्भिरक्षरैः पङ्क्तिर्बृहतीमत्यरिच्यत। तस्यामेतानि चत्वार्य्यक्षराण्यपच्छिद्याऽदधात्[३]। ते बृहतीं एव भूत्वा। बृहतीमुपसमश्रयताम्" इति। यानि पङ्क्त्यादीनि बृहत्या अधिकाक्षराणि यानि चानुष्टुबादीनि बृहतीं पूरयितुं न पर्य्याप्तानि तानि द्विविधान्यपि स्वमनस्येवममन्यन्त, वयं निर्वीर्य्याणि बृहतीकार्य्यं सम्पादयितुमसमर्थानि। अतो हीनानि अधमानीति तेषां खेदं दृष्ट्वा तत्परिहारोपायं सा बृहतीदेवताऽब्रवीत्। हे छन्दांसि यूयं मामेव भूत्वा प्राप्य मदीयामेवाक्षरसङ्ख्यां धृत्वेत्यर्थः। ततो मामुपेत्य सम्यक् सेवध्वमिति। तत्रानुष्टुभो द्वात्रिंशदक्षरत्वात् बृहत्या षट्त्रिंशदक्षरत्वात् बृहत्या चतुर्भिरक्षरैरियं अनुष्टुब्बृहतीं पूरयितुं न समर्था। पङ्क्तेः पञ्चभिः पादैरुपेतत्वात्। एकैकस्य पादस्याष्टाक्षरत्वे सति चत्वारिंशदक्षरा पङ्क्तिः सम्पद्यते। चतुर्भिरक्षरैः पङ्क्तिर्बृहत्या अधिका। तस्यां पङ्क्तौ

विद्यमानान्येतानि चत्वार्य्यधिकाचराणि अपच्छिद्येयं बृहती न्यूनायामनुष्टुभि स्थापितवती। ततस्ते पङ्क्त्यनुष्टुभौ बृहत्यावेव भूत्वा तां बृहतीमुपेत्य सम्यगसेवेताम्। एकस्य न्यूनाधिकयुग्मस्य बृहतीत्वं सम्पादितम्॥

अथान्ययोर्युग्मयोरपि तत् सम्पादयति। "अष्टाभिरचरैरुष्णिग्बृहतीं नोदभवत्। अष्टाभिरचरैस्त्रिष्टुब्बृहतीमत्यरिच्यत। तस्यामेतान्यष्टावचराण्यपच्छिद्यादधात्। ते बृहती एव भूत्वा बृहतीमुपसमश्रयताम्। द्वादशभिरचरैर्गायत्री बृहतीं नोदभवत्। द्वादशभिरचरैर्जगती बृहतीमत्यरिच्यत। तस्यामेतानि द्वादशाचराण्यपच्छिद्यादधात् [४]। ते बृहती एव भूत्वा। बृहतीमुपसमश्रयताम्" इति। उष्णिगष्टाविंशत्यचरा प्रसिद्धमन्यत्॥

अथानुसन्धानार्थं रथरूपकं परिकल्पयति। "सोऽब्रवीत् प्रजापतिः। छन्दाꣳसि रथो मे भवत। युष्माभिरहमेतमध्वानमनुसञ्चराणीति। तस्य गायत्री च जगती च पचावभवताम्। उष्णिक्च त्रिष्टुप्च प्रष्ट्यौ। अनुष्टुप्च पङ्क्तिश्च धुर्य्यौ। बृहत्येवोद्धिरभवत्। स एतं छन्दोरथमास्थाय। एतमध्वानमनुसमचरत्। एतꣳ ह वै छन्दोरथमास्थाय। एतमध्वानमनुसञ्चरति। येनैष एतत् सञ्चरति। य एवं विद्वान्त्सोमेन यजते। य उ चैनमेवं वेद" [५] इति। स प्रजापतिरादित्यरूपेणाकाशमार्गे गन्तुमेवमुवाच। हे छन्दांसि गायत्र्यादीनि यूयं मदर्थं रथाकारं प्राप्नुत। रथाकारैर्युष्माभिरहं एत-

माकाशाध्वानं अनुदिनं सञ्चरणीति। ततस्तस्य प्रजापतेर्गमनार्थं गायत्रीजगत्यौ पक्षौ रथस्य चक्रेऽभवताम्। उष्णिगनुष्टुभौ प्रष्ट्यावीषारूपे दीर्घकाष्ठे अभवताम्। अनुष्टुप्पङ्क्ती धुरि योजनीयावश्वावभवताम्। बृहत्येवोद्धिरूर्ध्वंस्थापनीया पीठसमाना उपवेशनफलकरूपाऽभूत्। स प्रजापतिस्तादृशं रथमारुह्यानुदिनमेतन्मार्गं सञ्चरति। यः पुमानेवं रथमनुसन्दधानः सोमेन यजते। यश्चैनं रथमेवं ध्यायति। स एष उभयविधोऽपि पुरुषो येनाध्वनैष प्रजापतिरेतद्दृश्यमानं स्थानं सञ्चरति। तमेतमेवाध्वानं छन्दोरथमारूढोऽनुदिनं सञ्चरति। अत्रैवं विद्वान् सोमेन यजत इति वाक्ये एवंशब्देन देवासुरा इत्याद्यनुवाकचतुष्टयोक्तः साङ्गः सोमयागप्रकारः परामृश्यते। अतोऽयं सोमयागस्य प्रयोगविधिर्द्रष्टव्यः। अथास्य प्रपाठकस्यानुवाकार्थः सङ्गृह्यते।

नक्षत्रेष्टकानां मन्त्राः पञ्चमाद्ये समीरिताः।
नक्षत्रद्वारकः पुण्यः काल उक्तो द्वितीयके॥
हेयाहेयावहर्भागौ तृतीये समुदीरितौ।
तुर्ये पात्रोक्तिरन्यस्मिन् मन्त्रावपनगाः श्रुताः॥
षष्ठे तद्ब्राह्मणं मन्त्रा इष्टकार्थ्या द्वयोः श्रुताः।
चतुर्षु नवमाद्येषु साङ्गः सोम उदीरितः॥
औपानुवाक्यरूपस्य पञ्चमोऽयं प्रपाठकः।
ब्राह्मणं राजसूयस्य प्रोक्तं षष्ठे च सप्तमे॥
अष्टमे संहितायान्तु समग्रा विधयः श्रुताः।

विधिव्याख्यानरूपत्वादनुब्राह्मणमुच्यते ॥
प्रतिप्रपाठकं तत्रानुवाका दश वर्णिताः।
षष्ठस्याद्येऽनुमत्याद्य इष्टयोऽथ द्वितीयके ॥
वैश्वदेवहवींषि स्युस्तदङ्गानि तृतीयके।
वरुणस्य प्रघासाः स्युस्तुर्य्ये शेषस्तु पञ्चमे ॥
साकमेधास्तु षष्ठे स्युस्तच्छेषः सप्तमे भवेत्।
अष्टमे पितृयज्ञः स्यात्तच्छेषो नवमे स्मृतः ॥
दशमे त्र्यम्बकानि स्युरिति षष्ठः समापितः।
सप्तमाद्ये शुनासीरीयेन्द्रतुर्य्ये उभे तथा ॥
पञ्च:श्रियमपामार्गहोमस्त्वार ईरिता
द्वितीये देविकादीनि तृतीये रत्नि
तुर्य्ये हविर्द्वैवसुवा पञ्चमे तु ज
षष्ठे स्याज्जलसंस्कारो दिग्जयः
अभिषेकोऽष्टमे प्रोक्तो रथारोहणमु.
दशमे सेव्यते सर्व्वैः सप्तमोऽयं प्रपाठकः ॥
अष्टमाद्ये हवींषि स्युः संसृपां दशमेयकः।
द्वितीये वेष्टयोऽन्यस्मिन् चतुर्थे प्रयजां हविः ॥
सौत्रामणिर्द्वयोः प्रोक्ता पवित्राहस्तु सप्तमे।
अभिषेच्योऽप्यष्टमे तु विशेषः साममन्त्रयोः ॥
न शेषोऽभिषेकगेऽन्यस्मिन् दशमे तु द्विरात्रकः।
चत्रस्य धृतिरित्येवमष्टमोऽयं प्रपाठकः ॥
अक्षरार्थः संहितायां तन्मन्त्रविधिभिः सह।

व्याख्यातोऽवेच्यतां तच काण्डोतोऽत्र समापितः ॥
वेदार्थस्य प्रकाशेन तमो हार्द्दं निवर्त्तयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे प्रथमकाण्डे पञ्चम-षष्ठ-सप्तमाष्टमप्रपाठकाः समाप्ताः ॥ * ॥

इति श्रीराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कराजसाम्राज्यधुरन्धरस्य ... (पाठः)

प्रथमकाण्डः समाप्तः ॥ शुभमस्तु ॥ ० ॥